# श्री: लक्ष्मी:



लक्ष्मीपूजनम् —वेदमन्त्राः
लक्ष्मीस्वरूपम्—मनोहर विद्यालंकार
लक्ष्मीप्रार्थनम्—सत्यभूषण योगी

एक: शब्द: सम्यग्ज्ञात: सुप्रयुक्त: स्वर्गे लोके कामधुग्भवति ।

— महर्षि: पतंजलि:

# स्मरणम्

श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः ।
श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि ।।

ऋ० १०.१५१.१

स इज्जनेन स विशा स जन्मना
स पुत्रैर्वाजं भरते धना नृभिः ।
देवानां यः पितरमाविवासति
श्रद्धामना हविषा ब्रह्मणस्पतिम् ।। ऋ० २.२६.३

पूज्य पितृचरण स्वर्गीय ला० श्यामसुन्दरलाल जी के अष्टम श्राद्ध (श्रद्धापूर्वक स्मरण) दिवस पर सप्रेम भेंट ।

आश्विन कृष्णा नवमी
संवत् २०३०
२०-९-१९७३

राधेश्याम
(मनोहर विद्यालंकार)

# प्रारम्भिक

बहुत दिनों से मन में एक विचार उठता था कि दीपावलि के दिन प्रायः सभी व्यापारी लक्ष्मीपूजन करते हैं। किन्तु जो लोग नवग्रह पूजा या गणेश लक्ष्मी की मूर्ति रखकर पूजा नहीं करना चाहते, वे क्या करें ?

इस पुस्तिका में इसी उद्देश्य से धन सम्बन्धी मन्त्रों का संग्रह करके, उन मन्त्रों का पद्यानुवाद तथा लक्ष्मी के स्वरूप का विवेचन किया गया है।

दीपावलि के दिन इन मन्त्रों तथा अनुवाद का पाठ करके लक्ष्मीपूजन का उद्देश्य पूरा किया जा सकता है।

—मनोहर विद्यालंकार

# लक्ष्मी-पूजनम्

## लक्ष्मीः (१)

१. सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥

ऋक् १०-७१-२

२. प्र पतेतः पापि लक्ष्मि नश्येतः प्रामुतः पत ।
अयस्मयेनाङ्केन द्विषते त्वा सजामसि ॥

अथर्व ७-११५-१

३. या मा लक्ष्मीः पतयालूरजुष्टाभिचस्कन्दवन्दनेव वृक्षम् ।
अन्यत्रास्मत्सवितस्तामितो धा हिरण्यहस्तो वसुनो रराणः ॥

अथर्व ७-११५-२

४. एकशतं लक्ष्म्यो मर्त्यस्य साकं तन्वा जनुषोऽधिजाताः ।
तासां पापिष्ठा निरितः प्रहिण्मः शिवा अस्मभ्यं जातवेदो नियच्छ ॥

अथर्व ७-११५-३

५. एता एना व्याकरं खिले गा विष्ठिता इव ।
रमन्तां पुण्या लक्ष्मीर्याः पापीस्ता अनीनशम् ॥

अथर्व ७-११५-४

६. तामाददानस्य ब्रह्मगवीं जिनतो ब्राह्मणं क्षत्रियस्य ।
अपक्रामति सूनृता वीर्यं पुण्या लक्ष्मीः ॥

अथर्व १२-५-६

# श्रीः (२)

७. श्रिये जातः श्रिय आ निरयाय श्रियं वयो जरितृभ्यो दधाति ।
श्रियं वसाना अमृतत्वमायन् भवन्ति सत्या समिथा मितद्रौ ।।

ऋग्वेद ९-९४-४

८. जोहूत्रो अग्निः प्रथमः पितेवेलस्पदे मनुषा यत्समिद्धः ।
श्रियं वसानो अमृतो विचेता मर्मृजेन्यः श्रवस्यः स वाजी ।।

ऋक् २-१०-१

९. अत्रिमनु स्वराज्यमग्निमुक्थानि वावृधुः ।
विश्वा अधि श्रियो दधे ।।

ऋक् २-८-५

१०. सो अस्मै श्रियमिद् दुहे भूयोभूयः ।
श्वः श्वस्तेन त्वं द्विषतो जहि ।।

अथर्व १०-६-१०

११. मनसः काममाकूतिं वाचः सत्यमशीय ।
पशूनां रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहा ।।

यजुः ३९-४

१२. शुक्रेभिरंगैरज आततन्वान् क्रतुं पुनानः कविभिः पवित्रैः ।
शोचिर्वसानः पर्यायुरपां श्रियो मिमीते बृहतीरनूनाः ।।

ऋक् ३-१-५

१३. ये समानाः समनसो जीवा जीवेषु मामकाः ।
तेषां श्रीर्मयि कल्पतामस्मिन् लोके शतं समाः ।।

यजुः १९-४६

अथर्व १२-१-६३

# मघम् (३)

१४. अग्निं होतारं प्रवृणेमियेधे गृत्सं कविं विश्वविदममूरम् ।
सनो यक्षद्देवताता यजीयान्, राये वाजाय वनते मघानि ।।

ऋक् ३-१९-१

१५. त्वं नो अग्न एषां गयं पुष्टिं च वर्धय ।
ये स्तोमेभि प्रसूरयो नरो मघान्यानशुः ।।

ऋक् ५-१०-३

१६. य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः ।
संधाता संधिं मघवा पुरुवसुः इष्कर्ता विह्रुतं पुनः ।।

ऋ० ८-१-१२

१७. सत्राहणं दाधृषिं तुम्रमिन्द्रं महामपारं वृषभं सुवज्रम् ।
हन्तायो वृत्रं सनितोत वाजं दाता मघानि मघवा सराधाः ।।

ऋ० ४-१-८७

१८. तिष्ठा सुकं मघवन्मा परागाः सोमस्यनु त्वा सुषुतस्य यक्षि ।
पितुर्न पुत्रः सिचमारभेत इन्द्र स्वादिष्ठया गिरा शचीवः ।।

ऋक् ३-५३-२

# रेक्णः (४)

१९. त्वमग्न उरूशंसाय वाघते स्पार्हं यद्रेक्णः परमं वनोषितत् ।
आध्रस्य चित्प्रमतिरुच्यसेपिता प्रपाकं शास्सि प्रदिशो विदुष्टरः ।।

ऋक् १-३१-१४

२०. परिषद्यं ह्यरणस्य रेक्णो नित्यस्य रायः पतयः स्याम ।
न शेषो अग्ने अन्यजातमस्त्यचेतानस्य मापथो विदुक्ष. ।।

ऋक् ७-४-७

२१. परा गावो यवसं कच्चिदाघृणे नित्यं रेक्णो अमर्त्य ।
अस्माकं पूषन्नविता शिवो भव मंहिष्ठो वाजसातये ॥

ऋक् ८-४-१८

२२. ददी रेक्णस्तन्वे ददिर्वसु ददिर्वाजेषु पुरुहूतवाजिनम् ।

ऋक् ८-४६-१५

२३. बसूरूद्रा पुरुमन्तू वृधन्ता दशस्यतं नो वृषणावभिष्टौ ।
दस्रा ह यद् रेक्ण औचथ्यो वांप्रयत्सस्राथे अकवाभिरूती ॥

ऋक् १-१५८-१

## रिक्थम् (५)

२४. न जामये तान्वो रिक्थमारैक् चकार गर्भं सनितुर्निधानम् ।
यदीमातरो जनयन्त वह्निमन्य: कर्ता सुकृतोरन्य ऋन्धन् ॥

ऋक् ३-३१-२

## वेदः (६)

२५. एते त इन्द्र जन्तवो विश्वं पुष्यन्ति वार्यम् ।
अन्तर्हि ख्यो जनानामर्यो वेदो अदाशुषाम्—तेषां नो वेद आभर ॥

ऋक् १-८१-९

२६. किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति धर्मम् ।
आ नो भर प्रमगन्दस्य वेदो नैचा शाखं मघवन्रन्धयान: ॥

ऋक् ३-५३-१४

२७. स नो वेदो अमात्यमग्नी रक्षतु विश्वत: ।
उता स्मान्पात्वंहस: ॥

ऋक् ७-१५-३

२८. जातवेदसे सुनवाम सोमम्
अराती यतो निदहाति वेद: ।
स न: पर्षदति दुर्गाणि विश्वा
नावेव सिन्धुं दुरितात्यग्नि: ।।

ऋक् १-९९-११

## वरिव : (७)

२९. पवस्व देवमादनो विचर्षणिरप्सा इन्द्राय वरुणाय वायवे ।
कृधी नो अध वरिव: स्वस्तिमदुरुक्षितौ गृणीहि दैव्यं जनम् ।।

ऋक् ९-८४-१

## श्वात्रम् (८)

३०. त्वमग्ने मनवे द्यामवाशय: पुरूरवसे सुकृते सुकृत्तर: ।
श्वात्रेण यत्पित्रोर्मुच्यसे पर्यात्वा पूर्वमनयन्नापरं पुन: ।।

ऋक् १-३१-४

## रत्नम् (९)

३१. अयं वा मधुमत्तम: सुत: सोमऋतावृधा ।
तमश्विनापिबतं त्रिरो अन्ह्यं धत्तं रत्नानि दाशुषे ।।

ऋक् १-४७-१

३२. नृवत्त इन्द्र नृतमाभिरूती वंसीमहि वामं श्रोमतेभि: ।
ईक्षे हि वस्व उभयस्य राजन्धा रत्नं महि स्थूरं बृहन्तम् ।।

ऋक् ६-१९-१०

## रयिः (१०)

३३. आ नो अग्ने रयिं भर सत्रासाहं वरेण्यम् ।
विश्वासु पृत्सु दुष्टरम् ॥

ऋक् १-७९-८

३४. श्रेष्ठं यविष्ठ भारताग्ने द्युमन्तमाभर ।
वसो पुरुस्पृहं रयिम् ॥

ऋक् २-७-१

३५. प्र सोमासः स्वाध्यः पवमानासो अक्रमुः ।
रयिं कृण्वन्ति चेतनम् ॥

ऋक् ९-३१-१

३६. पुनान इन्द वा भर सोम द्विबर्हसं रयिम् ।
त्वं वसूनि पुष्यसि विश्वानि दाशुषो गृहे ॥

ऋक् ९-१००-२

३७. आ नो रयिं मदच्युतं पुरुक्षुं विश्वधायसम् ।
इयर्ता मरुतो दिवः ॥

ऋक् ८-७-१३

## क्षत्रम् (११)

३८. असमं क्षत्रमसमा मनीषा प्रसोमपा अपसा सन्तु नेमे ।
ये त इन्द्र ददुषो वर्धयन्ति महिक्षत्रं स्थविरं वृष्ण्यं च ॥

ऋक् १-५४-८

३९. ता नः शक्तं पार्थिवस्य महो रायो दिव्यस्य ।
महिवां क्षत्रं देवेषु ॥

ऋक् ५-६८-३

४०. अस्माकमग्ने मघवत्सु धारयानामि क्षत्रमजरं सुवीर्यम् ।
वयं जयेम शतिनं सहस्त्रिणं वैश्वानर वाजमग्ने तवोतिभिः ॥

ऋक् ६-८-६

## भगः (१२)

४१. स्वस्तये वाजिभिश्च प्रणेतः संयन्महीरिष आसत्सि पूर्वीः ।
रायो वन्तारो बृहतः स्यामास्मे अस्तु भग इन्द्र प्रजावान् ॥

ऋक् ३-३०-१८

४२. देवस्य सवितुर्वयं वाजयन्तः पुरंध्या ।
भगस्य रातिमीमहे ॥

ऋक् ३-६२-११

## मील्हुम् (१३)

४३. रुद्रस्य ये मील्हुषः सन्ति पुत्रा यांश्चोनु दाधृविर्भरध्यै ।
विदे हि माता महोमहीषा सेत् पृश्निः सुभ्वे गर्भमाधात् ॥

ऋक् ६-६६-३

४४. बाधसे जनान् वृषभेव मन्युना धृषौ मीलह ऋचीषम ।
अस्माकं बोध्यविता महाधने तनूष्वप्सु सूर्ये ॥

ऋक् ६-४६-४

४५. तं वः शर्धं रथे शुभं त्वेषं पनस्युमाहुवे ।
यस्मिन्त्सुजाता सुभगामहीयते सचामरुत्सुमीलहुषी ॥

ऋक् ५-५६-६

## गयः (१४)

४६. आ पवमान नो भरार्यो अदाशुषो गयम् ।
कृधि प्रजावतीरिषः ॥

ऋक् ९-२३-३

४७. अदब्धेभिः सवितः पायुभिष्ट्वं शिवेभिरद्य परिपाहिनो गयम् ।
हिरण्यजिह्वः सुविताय नव्यसे रक्षामाकिर्नो अघशंस ईशता ॥

ऋक् ६-७१-३

४८. आ नः सोम पवमानः किरावसु
इन्द्रो भव मघवा राधसो महः ।
शिक्षा वयोधो वसवे सुचेतुना
मा नो गयमारे अस्मत् परासिचः ॥

ऋक् ९-८१-३

## द्युम्नम् (१५)

४९. विभोष्ट इन्द्र राधसो विभ्वी रातिः शतक्रतो ।
अथा नो विश्वचर्षणे द्युम्नं सुदत्रमंहय ॥

ऋक् ५-३८-१

५०. अस्य ते सख्ये वयं तवेन्दो द्युम्ने उत्तमे ।
सासह्याम पृतन्यतः ॥

ऋक् ९-६१-२९

५१. त्वं सोमक्रतुभिः सुक्रतुर्भूस्त्वं दक्षैः सुदक्षो विश्ववेदाः ।
त्वं वृषा वृषत्वेभिर्महित्वा द्युम्नेभिर्द्युम्न्यभवो नृचक्षाः ॥

ऋक् १-९१-२

## इन्द्रियम् (१६)

५२. अपां पेरु जीवधन्यं भरामहे देवाव्यं सुहवमध्वरश्रियम् ।
सुरश्मिं सोममिन्द्रियं यमीमहि तद्देवानामवो अद्या वृणीमहे ॥

ऋक् १०-३६-८

५३. त उक्षितासो महिमानमाशत दिवि रुद्रासो अधिचक्रिरे सदः ।
अर्चन्तो अर्कं जनयन्त इन्द्रियमधिश्रियो दधिरे पृश्निमातरः ॥

ऋक् १-८५-२

५४. उप नो देवा अवसागमन्त्वङ्गिरसां सामभिः स्तूयमानाः ।
इन्द्र इन्द्रियैर्मरुतोमरुद्भिरादित्यैर्नो अदितिः शर्मयंसत् ॥

ऋक् १-१०७-२

## वसु (१७)

५५. नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वसु ।
द्युमदग्ने सुवीर्यं वर्षिष्ठमनुपक्षितम् ॥

ऋक् ३-१३-७

५६. शचीव इन्द्र पुरुकृद्द्युमत्तम तवेदिदमभितश्चेकिते वसु ।
अतः संगृभ्याभिभूत आभर मात्वायतो जरितुः काममूनयीः ॥

ऋक् १-५३-३

५७. कुविन्मागोपांकरसेजनस्य कुविद्राजानं मघवन्नृजीषिन् ।
कुविन्म ऋषिं पपिवांसं सुतस्य कुविन्मे वस्वो अमृतस्य शिक्षाः ॥

ऋक् ३-४३-५

५८. आ नो भर दक्षिणेनाभि सव्येन प्रमृश ।
इन्द्र मा नो वसोर्निर्भाक् ॥

ऋक् ८-८१-६

५९. अस्मे वसूनि धारय सोम दिव्यानि पार्थिवा ।
इन्दो विश्वानि वार्या ॥

ऋक् ९-६३-३०

## रायः (१८)

६०. अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ॥
ऋक् १-१८९-१

६१. प्रस्वानासो रथा इवार्वन्तो न श्रवस्यवः ।
सोमासो राये अक्रमुः ॥

ऋक् ९-१०-१

६२. त्वष्टुर्जामातारं वयमीशानं राय ईमहे ।
सुतावन्तो वायुं द्युम्ना जनासः ॥

ऋक् ८-२६-२२

## राधः (१९)

६३. अग्ने यजस्व हविषा यजीयाञ्छ्रुष्टी देष्णमभि गृणीहि राधः ।
त्वं ह्यसि रयिपती रयीणां त्वं शुक्रस्य वचसो मनोता ॥
ऋक् २-९-५४

६४. अस्मभ्यं तद्वसो दानाय राधः समर्थयस्व बहु ते वसव्यम् ।
इन्द्र यच्चित्रं श्रवस्या अनु द्यून्बृहद्वदेम विदथे सुवीराः ॥
ऋक् २-१३-१३

६५. अवीवृधद्वो अमृता अमन्दीदेकद्यूर्देवा उत याश्च देवीः ।
तस्मा उ राधः कृणुत प्रशस्तं प्रातर्मक्षू धिया वसुर्जगम्यात् ॥
ऋक् ८-८०-१०

## भोजनम् (२०)

६६. तत्सवितुर्वृणीमहे वयं देवस्य भोजनम् ।
श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि ॥

ऋक् ५-८२-१

६७. इदं पित्रे मरुतामुच्यते वचः स्वादोः स्वादीयो रुद्राय वर्धनम् ।
रास्वा च नो अमृत मर्तभोजनं त्मने तोकाय तनयाय मृड ॥

ऋक् १-११४-६

६८. द्यामिन्द्रो हरिधायसं पृथिवीं हरिवर्पसम् ।
अधारयद्धरितोर्भूरि भोजनं ययोरन्तर्हरिश्चरत् ॥

ऋक् ३-४४-३

## तना (२१)

६९. अग्ने दिव सूनुरसि प्रचेतास्तना पृथिव्या उत विश्ववेदाः ।
ऋधग्देवाँ इह यजा चिकित्वः ॥

ऋक् ३-२५-१

७०. धिया चक्रे वरेण्यो भूतानां गर्भमादधे ।
दक्षस्य पितरं तना ॥

ऋक् ३-२७-९

७१. त्वं सोम विपश्चितं तना पुनान आयुषु ।
अव्यो वारं विधावसि ॥

ऋक् ९-१६-८

## नृम्णम् (२२)

७२. हस्ते दधानो नृम्णा विश्वान्यमे देवान्धाद्गुहानिषीदन् ॥

ऋक् १-६७-३

७३. ऋष्टयो वो मरुतो असयोरधि
सह ओजो बाह्वोर्वो बलं हितम् ।
नृम्णा शीर्षस्वायुधा रथेषु वो
विश्वाव: श्रीरधि तनूषु पिपिशे ॥

ऋक् ५-५७-६

७४. तं त्वा नृम्णानि बिभ्रतं सधस्थेषु महो दिव: ।
चारुं सुकृत्यये महे ॥

ऋक् ६-४८-१

## बन्धु: (२३)

७५. आ नो देवेभिरुपयातमर्वाक् सजोषसा नासत्या रथेन ।
युवोर्हि न: सख्या पित्र्याणि समानो बन्धुरुत तस्य वित्तम् ॥

ऋक् ७-७२-२

७६. वयं हि त्वा बन्धुमन्तमबन्धवो विप्रास इन्द्र येमिम ।
या ते धामानि वृषभ तेभिरागहि विश्वेभि: सोमपीतये ॥

ऋक् ८-२१-४

७७. समानं वां सजात्यं समानो बन्धुरश्विना ।
अन्तिषद् भूतुवामव: ॥

ऋक् ८-७३-१२

## मेधा (२४)

७८. सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ।
सनिं मेधामयासिषम् ॥

ऋक् १-१८-६

७९. अस्मे धेहि द्युमद्यशो मघवद्भ्यश्च मह्यं च ।
सनिं मेधामुत श्रवः ॥

ऋक् ९-३२-६

८०. यां मेधां देवगणाः पितरश्चोपासते ।
तया मामग्ने मेधयाग्ने मेधाविनं कुरु ॥

यजुः ३२-१४

## यशः (२५)

८१. गिर्वणः पाहि नः सुतं मधोर्धाराभिरज्यसे ।
इन्द्र त्वा दातमिद्यशः ॥

ऋक् ३-४०-६

८२. यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि ।
जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्याम् ॥

ऋक् ५-४-१०

८३. ये स्था मनोर्यज्ञियास्ते शृणोतन
यद्वो देवा ईमहे तद्ददातन ।
जैत्रं क्रतुं रयिमद् वीरवद् यशस्
तद्देवानामवो अद्या वृणीमहे ॥

ऋक् १०-३६-१०

## ब्रह्म (२६)

८४. ब्रह्म च ते जातवेदो नमश्चेयं च गीः सदमिद्वर्धनी भूत् ।
रक्षाणो अग्ने तनयानि तोका रक्षोतनस्तन्वो अप्रयुच्छन् ।।

ऋक् १०-४-७

८५. य इमे रोदसी उभे अहमिन्द्रमतुष्टवम् ।
विश्वामित्रस्य रक्षति ब्रह्मेदं भारतं जनम् ।।

ऋक् ३-५३-१२

८६. ब्रह्म प्रजावदाभर जातवेदो विचर्षणे ।
अग्ने यद्दीदयद्दिवि ।।

ऋक् ६-१६-३६

## द्रविणम् (२७)

८७. इन्द्र श्रेष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे ।
पोषं रयीणामरिष्टिं तनूनां स्वाद्मानं वाचः सुदिनत्वमह्नाम् ।।

ऋक् २-२१-६

८८. इन्दुः पुनानः प्रजामुराणः करद्विश्वानि द्रविणानि नः ।।

ऋक् ९-१०९-९

८९. अभूद्देवः सविता वन्द्यो नु न इदानीमह्न उपवाच्यो नृभिः ।
वियो रत्नाभजति मानवेभ्यः श्रेष्ठंनोअत्रद्रविणंयथादधत् ।।

ऋक् ४-५४-१

## श्रीः

९०. अस्मे सोम श्रियमधि नि धेहि शतस्य नृणाम् ।
महि श्रवस्तुविनृम्णम् ।।

ऋक् १-४३-७

६१. भारतीळे सरस्वति या वः सर्वा उपब्रुवे ।
तानश्चोदयत श्रिये ॥

ऋक् १-१८८-८

६२. हर्यन्नुषसमर्चयः सूर्यं हर्यन्नरोचयः ।
विद्वांश्चिकित्वान्हर्यश्ववर्धस इन्द्र विश्वा अभिश्रियः ॥

ऋक् ३-४४-२

## श्रवः (२८)

६३. सं गोमदिन्द्र वाजवदस्मे पृथु श्रवो बृहद् ।
विश्वायुर्धेह्यक्षितम् ॥

ऋक् १-९-७

६४. परीमे गामनेषत पर्यग्निमहृषत ।
देवेष्वक्रत श्रवः क इमाँ आदधर्षति ॥

ऋक् १०-१५५-५

६५. ससर्परीरमतिं बाधमाना बृहन्मिमाय जमदग्नि दत्ता ।
आ सूर्यस्य दुहिता ततान श्रवो देवेष्वमृतमजुर्यम् ॥

ऋक् ३-५३-१५

## वृत्रम् (२९)

६६. हतं वृत्रं सुदानव इन्द्रेण सहसा युजा ।
मा नो दुःशंस ईशत ॥

ऋक् १-२३-९

६७. धनं न स्पन्द्रं बहुलं यो अस्मै
तीव्रान्त्सोमाँ आसुनोति प्रयस्वान् ।
तस्मै शत्रून् सुतुकान् प्रातरह्नो
निस्वष्ट्रान्युवति हन्ति वृत्रम् ॥

ऋक् १०-४२-५

९८. जघ्निर्वृत्रममित्रियं सस्निर्वाजं दिवे दिवे ।
गोषा उ अश्वसा असि ।।

ऋक् ९-६१-२०

## वृतम् (३०)

९९. वयं जयेम त्वया युजा वृतमस्माकमंशमुदवा भरे भरे ।
अस्मभ्यमिन्द्र वरिवः सुगं कृधि प्रशत्रूणां मघवन्वृष्ण्यारुज ।।

ऋक् १-१०२-४

१००. आक्षोदो महिवृतं नदीनां परिष्ठितमसृज ऊर्मिमपाम् ।
तासामनु प्रवत इन्द्र पन्थां प्रार्दयो नीची रपसः समुद्रम् ।।

ऋक् ६-१७-१२

१०१. सत्रासाहो जनभक्षो जनं सहश्च्यवनो युध्मो अनुजोषमुक्षितः ।
वृतंचयः सहुरिर्विक्ष्वारित इन्द्रस्य वोचं प्रकृतानि वीर्या ।।

ऋक् २-२१-३

## अर्थम् (३१)

१०२. अग्निर्धिया स चेतति केतुर्यज्ञस्य पूर्व्यः ।
अर्थं ह्यस्य तरणि ।।

ऋक् ३-११-३

१०३. परा याहि मघवन्ना च याहीन्द्र भ्रातरुभयत्रा ते अर्थम् ।
यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो रासभस्य ।।

ऋक् ३-५३-५

१०४. दीर्घतमा मामतेयो जुजुर्वान्दशमे युगे ।
अपामर्थं यतीनां ब्रह्मा भवति सारथिः ।।

ऋक् १-१५८-६

## हिरण्यम् (३२)

१०५ त्वं नृचक्षा असि सोमविश्वतः पवमान वृषभ ता विधावसि ।
सनः पवस्व वसुमद्धिरण्यवद्वयं स्याम भुवनेषु जीवसे ।।

ऋक् ९-८६-३८

१०६ यद्धिरण्यं सूर्येण सुवर्णं प्रजावन्तो मनव पूर्व ईषिरे ।
तत्वा चन्द्रं वर्चसा संसृजत्यायुष्मान्भवति यो बिभर्ति ।।

अथर्व १९-२६-२

१०७. अस्य देवाः प्रदिशि ज्योतिरस्तु सूर्यो अग्निरुत वा हिरण्यम् ।
सपत्ना अस्मदधरे भवन्तूत्तमंनाकमधि रोहयेयम् ।।

अथर्व १-९-२

## द्युक्षम् (३३)

१०८. यन्मन्यसे वरेण्यमिन्द्र द्युक्षं तदाभर ।
विद्याम तस्य ते वयमकूपारस्य दावने ।।

ऋक् ५-३९-२

१०९. आ तू सुशिप्र दंपते रथं तिष्ठा हिरण्ययम् ।
अध द्युक्षं सचेवहि सहस्रपादमरुषं स्वस्तिगामनेहसम् ।।

अथर्व २०-९२-१३

११०. द्युक्षं सुदानुं तविषीभिरावृतं गिरिं न पुरुभोजसम् ।
क्षुमन्तं वाजं शतिनं सहस्रिणं मक्षूगोमन्तमीमहे ।।

अथर्व २०-४९-५

## धनम् (३४)

१११. घृतव्रतो धनदाः सोमवृद्धः
स हि वामस्य वसुनः पुरुक्षुः ।
संजग्मिरे पथ्या उ रायो अस्मिन्
समुद्रे न सिन्धवो यादमानाः ।।

ऋक् ६-१६-५

११२. येन धनेन प्रपणं चरामि धनेन देवाः धनमिच्छमानः ।
तन्मे भूयो भवतु मा कनीयानग्ने सातघ्नो देवान्हविषा निषेध ।।

अथर्व ३-१५-५

११३. इन्द्रमहं बणिजं चोदयामि स न ऐतु पुर एता नो अस्तु ।
नुदन्नराति परिपन्थिनं मृगं स ईशानो धनदा अस्तु मह्यम् ।।

अथर्व ३-१५-१

# श्री सूक्तम्

## ऋग्वेद के ५म मण्डल के अन्त में परिशिष्ट

हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१॥

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥२॥

अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् ।
श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ॥३॥

कां सोस्मितां हिरण्यप्रकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ।
पद्मेस्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥४॥

चन्द्रां प्रभासां यशसाज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ।
तां पद्मिनीमीं शरणं प्रपद्येऽलक्ष्मीर्नश्यतां त्वां वृणे ॥५॥

आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथबिल्वः ।
तस्य फलानि तपसा नुदन्तु या अन्तरा याश्च बाह्या अलक्ष्मीः ॥६॥

उपैतु मां देवसखः कीर्तिश्च मणिना सह ।
प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन्कीर्तिमृद्धिं ददातु मे ॥७॥

क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ।
अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥८॥

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥९॥

मनसः काममाकूतिं वाचः सत्यमशीमहि ।
पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥१०॥

कर्दमेन प्रजाभूता मयिसंभव कर्दम ।
श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥११॥

आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे ।
नि च देवीं मातरं श्रियं वासय मे कुले ॥१२॥

आर्द्रां पुष्करिणीं पुष्टिं पिंगलां पद्ममालिनीम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१३॥

आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम् ।
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१४॥

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान् विन्देयं पुरुषानहम् ॥१५॥

यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ।
सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥१६॥

पद्मानने पद्मविपद्मपत्रे पद्मप्रिये पद्मदलायताक्षि ।
विश्वप्रिये विष्णुमनोऽनुकूले त्वत्पादपद्मं मयि संनिधत्स्व ॥१७॥

पद्मानने पद्म ऊरू पद्माक्षि पद्मसंभवे ।
तन्मे भज पद्माक्षि येन सौख्यं लभाम्यहम् ॥१८॥

अश्वदायि गोदायि धनदायि महाधने ।
धनं मे जुषतां देवि सर्वकामांश्च देहि मे ॥१९॥

पुत्रपौत्रधनं धान्यं हस्त्यश्वाश्वतरी रथम् ।
प्रजानां भवसि माता आयुष्मन्तं करोतु मे ॥२०॥

धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः ।
धनमिन्द्रो बृहस्पतिर्वरुणो धनमश्विना ॥२१॥

वैनतेय सोमं पिब सोमं पिबतु वृत्रहा ।
सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः ॥२२॥

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्त्या श्रीसूक्तजापिनाम् ॥२३॥

सरसिजनिलये सरोजहस्ते धवलतरांशुकगंधमाल्यशोभे ।
भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥२४॥

विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम् ।
लक्ष्मीं प्रियसखीं भूमिं नमाम्यच्युतवल्लभाम् ॥२५॥

महालक्ष्म्यै चविद्महे विष्णुपत्न्यै च धीमहि ।
तन्नो लक्ष्मीः प्रचोदयात् ॥२६॥

आनंदः कर्दमः श्रीदश्चिक्लीत इति विश्रुताः ।
ऋषयः श्रियः पुत्राश्च श्रीर्देवी देवता मताः ॥२७॥

ऋणरोगादिदारिद्रचपापक्षुदपमृत्यवः ।
भयशोकमनस्तापा नश्यन्तु मम सर्वदा ॥२८॥

श्रीवर्चस्वमायुष्यमारोग्यमविधाच्छोभमानं महीयते ।
धनं धान्यं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥२९॥

# पूजनीय पितृचरण

आपने यह देह दी,
समय समय पर सलाह दी,
बरसों आपके साथ रहा,
फिर भी अनजान रहा,
कर्तव्य समझ सेवा की,
बड़ा मान श्रद्धा दी,
फिर भी आपके स्वरूप को
समझ न सका,
अपने मन को सन्तुष्ट
कर न सका,
कभी कभी अनुचित शब्द कहे,
आपके मन को रुष्ट किया,
अब है यह कामना
आपके अन्तिम उपदेश पर
अमल कर सकूं।
आपके जीवन यापन क्रम का
अनुकरण कर सकूं।
आपको सन्तुष्ट कर स्वयं सन्तुष्ट हो सकूं।
अपने जीवन को निश्चिन्त कर सकूं
आनन्द से रहकर शान्त, शान्त ही जा सकूं।

—राधेश्याम (मनोहर वि०अ०)

# लक्ष्मीस्वरूपम्

## लक्ष्मी:

पुराणों की मान्यता के अनुसार लक्ष्मी धन सम्पत्ति की देवी तथा विष्णु की पत्नी है। कुछ समय बाद लक्ष्मी का अर्थ धन सम्पत्ति ही रह गया। जिसके पास धन हो उसे धनी धनवान् धनपति कहते हैं, इसी तरह उसे लक्ष्मीपति या लक्ष्मीवान् भी कहने लगे।

लक्ष्मी शब्द की उत्पत्ति चुरादिगण की धातु 'लक्ष दर्शनाङ्कनयो:' से हुई है। जिस वस्तु को देखा जाए या जिसकी ओर इंगित किया जाए— वह लक्ष्म कहलाता है। इस लक्ष्म के निमित्त से जिसकी तरफ देखा जाए, या इंगित किया जाए वह लक्ष्मी हुई। दूसरे शब्दों में जो दूसरों को आकर्षित करे, वह लक्ष्मी है। परिणामस्वरूप कान्ति, शोभा, रौब, शान, बल, धन इत्यादि सारे पदार्थ जो वरेण्य हैं वे सब भी लक्ष्मी पद के अर्थ हैं। इसी लिये शतपथ में कहा है : तस्माद्यस्य मुखे लक्ष्म (कान्ति:) भवति तं पुण्यलक्ष्मीक इत्याचक्षते। इसी विचार को ध्यान में रखकर स्वामी दयानन्द ने लक्ष्मी शब्द का अर्थ—सर्वमश्वर्यम्, शुभ-लक्षणवती स्त्री तथा धनादिश्च किया है।

इसी भावना को ध्यान में रखते हुए निरुक्तकार ने व्युत्पत्ति की है:—लक्ष्मी:, लक्षणाद् वा, लांछनाद् वा, लषतेर्वास्यात्प्रेप्साकर्मणो लभ्यते-र्वाश्लेषकर्मणो, लज्जतेर्वा स्यादश्लाघाकर्मण:।

तात्पर्य यही है कि जिसकी लोग कामना करते हैं, जिससे मनुष्य को लाभ होता है, जिसके होने से मनुष्य उसकी तरफ इशारा करते हैं,— वे सब गुण या पदार्थ लक्ष्मी पद वाच्य हैं। संसार में सबसे अधिक धन की कामना की जाती है, धन से लाभ उठाया जाता है, धनपति को ही

इंगित किया जाता है—इसलिये सामान्य जनों की दृष्टि व व्यवहार में लक्ष्मी शब्द का अर्थ धन किया जाता है।

## वेद में लक्ष्मीः

ऋग्वेद में लक्ष्मी शब्द १०-७१-२ में केबल एक बार प्रयुक्त हुआ है। इस सूक्त का देवता साम तथा ऋषि बृहस्पति है। वहां इसका अर्थ प्रकरणानुसार ज्ञान अथवा शालीनता से भिन्न कुछ हो नहीं सकता। (भद्रैषां लक्ष्मीर्निहिताधि वाचि।)

यजुर्वेद में (श्रीश्च ते लक्ष्मीश्च पत्न्यौ) ३१-२२ केवल एक बार प्रयुक्त हुआ है। इसका देवता आदित्य तथा ऋषि नारायण है। वहां इसका अर्थ प्रकाश या ज्ञान, अथवा शक्ति या प्रतिष्ठा, अथवा शोभा या सम्पत्ति कुछ भी किया जा सकता है। वास्तव में लक्ष्मी का वही स्वरूप है जो योगवासिष्ठ में कुलांगना का रूप चित्रित किया है। लक्ष्मीः कहें या पत्नी, बात वही है। सामवेद में यह शब्द नहीं है।

अथर्ववेद में लक्ष्मी: शब्द कई बार आया है। किन्तु प्रकरण वहां भी दो हैं।

(१) तामाददानस्य ब्रह्मगवीं जिनतो ब्राह्मणं क्षत्रियस्य।
अपक्रामति सूनृता वीर्यं पुण्या लक्ष्मी:। अथर्व १२-५-६

(२) प्रपतेत: पापि लक्ष्मि नश्येत: प्रामुत: पत।
रमन्तां पुण्या लक्ष्मीर्या: पापीस्ता अनीनशम्॥
अथर्व ७-१२०-४

पहले प्रकरण में कहा है कि जो क्षत्रिय ब्राह्मण की हिंसा करता है— उसे परेशान करता करता है, उसकी गौ—वाणी को छीनना चाहता है, डरा धमका कर ब्राह्मण को चुप करा देता है, उसे सत्य प्रकट करने से रोकता है—उस क्षत्रिय की पुण्या लक्ष्मी अर्थात् सत्यात्मिका वाक् तथा वीर्यशक्ति उसे छोड़ जाती है।

यहां तो मन्त्र स्वय ही कहता है कि क्षत्रिय की लक्ष्मी उसका वीर्य तथा उसका सत्याग्रह और सत्य प्रकाश का सामर्थ्य है।

दूसरे प्रकरण में लक्ष्मी का अर्थ सम्पत्ति, ऐश्वर्य तथा धन माना जा सकता है। क्योंकि ब्राह्मण और क्षत्रिय की लक्ष्मी तो सामान्यतया ज्ञान और बल अथवा उनसे उत्पन्न होने वाली प्रतिष्ठा, कीर्ति ही है। किन्तु वैश्य की लक्ष्मी सैकड़ों प्रकार की है। व्यापार में नाना प्रकार की मशीनरी, भूमि—जायदाद —उपकरण, फिर भिन्न-भिन्न उद्योग और उनसे उत्पादित सामग्री—सम्पत्ति के प्रदर्शन के नाना प्रकार—धर्मशाला, विद्यालय हस्पताल इत्यादि सब स्थूल वस्तुएं वैश्य की लक्ष्मी हैं।

इनमें छांट आवश्यक है। अपने पास केवल पुण्या लक्ष्मी को रखना, शेष पापी लक्ष्मी को नष्ट कर देना है। उसे परोपकार में लगा कर पुण्या बना लेना है।

इस प्रकार स्पष्ट है कि वेद की लक्ष्मी वास्तव में शक्तिरूपा, कीर्तिरूपा, प्रतिष्ठारूपा, ऐश्वर्यरूपा वस्तु है।

यदि मनुष्य ज्ञान के क्षेत्र में काम करता है तो उसकी लक्ष्मी वाणी में स्थित है। उसकी वाणी ही शक्ति है, वही प्रतिष्ठा और कीर्ति को देने वाली है।

यदि मनुष्य बल के क्षेत्र में व्यस्त है तो उसका वीर्य—पराक्रम तथा उसे व्यक्त करने का प्रकार और उसकी सत्यता के प्रकाशित करने की दृढ़ता ही उसे सच्ची प्रतिष्ठा देती है।

यदि मनुष्य धन सम्पत्ति के क्षेत्र में काम करता है तो उसका स्थूल धन व ऐश्वर्य ही उसे सच्ची प्रतिष्ठा देते हैं। उसकी कीर्ति बढ़ाते हैं।

इसलिये वैदिक लक्ष्मी ज्ञान, बल, धन, तीनों वस्तुओं की प्रतीक हैं। लोक में भी ये तीनों शक्तियां पात्र भेद के कारण पर्यायवाची समझी जाती हैं। यथा—ब्राह्मण के लिये ज्ञान ही उसका बल अथवा धन है। क्षत्रिय का बल ही उसका धन तथा ज्ञान है। और वैश्य के लिये धन ही उसका सर्वस्व है—उसे बल कहो, ज्ञान कहो। वह धन के द्वारा

बल और ज्ञान को प्राप्त कर सकता है, खरीद सकता है।

किन्तु लोक में वैश्य बहुमत में हैं। इसलिये वैश्य का पर्याय विट् प्रजावाचक बन गया है। इसी प्रकार उन प्रजाओं की लक्ष्मी: अर्थात धन सम्पत्ति ही लक्ष्मी वाचक बन गई। वास्तव में तो लक्ष्मी: शक्ति है, प्रतिष्ठा है, कीर्ति है, ऐश्वर्य है, वह पात्र भेद से भिन्न-भिन्न है।

## श्री:

अब लक्ष्मी शब्द के बाद श्री: शब्द पर आते हैं। श्री: शब्द लक्ष्मी का पर्याय है। फिर भी लक्ष्मी की अपेक्षा अपनी भावना को अधिक संभाले हुए है। अर्थात् श्री:=शोभा=कान्ति कहने से लक्ष्मी की अपेक्षा जल्दी इससे ज्ञान, बल और धन तथा सेवा का ग्रहण किया जा सकता है। श्री: शब्द 'श्रृञ् सेवायाम्' धातु से बना है। अर्थ है—जिसकी सेवा करें, जिसके कारण किसी की सेवा करें, अथवा जिसके द्वारा दूसरों की सेवा की जा सके—वह वस्तु, वह शक्ति, वह भावना श्री: है। यही श्री: ब्राह्मण के लिये उसका ज्ञान, क्षत्रिय के लिये उसका बल, वैश्य के लिये उसका धन तथा शूद्र के लिये उसकी सेवा है। इसलिये श्री: शब्द भी लक्ष्मी: का पूर्ण रूप से पूरी भावना को व्यक्त करने के कारण पूर्ण पर्याय है।

## वेद में श्री:

ऋग्वेद में श्री: शब्द भिन्न-भिन्न विभक्तियों में अनेक बार प्रयुक्त हुआ है किन्तु शुद्ध रूप में केवल एक बार ५-५७-६ "विश्वाव: श्रीरधि तनूषु पिपिशे" में आया है। यहां इसका अर्थ शोभा या शालीनता के अतिरिक्त कुछ नहीं हो सकता। अधिक स्थूल रूप में देखें तो शरीर का सम्बन्ध होने से इसका अर्थ सौन्दर्य, स्वास्थ्य या वीर्य भी किया जा सकता है। इस श्री: का सम्बन्ध मरुतों या क्षत्रियों से है।

लोक में शोभा, शालीनता या महत्ता मुख्य रूप से धन के द्वारा प्राप्त होती है, इसलिये श्री: का अर्थ धन और ऐश्वर्य करने लग गए।

वास्तव में श्री: पूर्ण रूप से लक्ष्मी: की भावना को अभिव्यक्त करता है। यजुर्वेद में श्री: शब्द १० बार से अधिक प्रयुक्त हुआ है। किन्तु

(१) 'मनस: काममाकूतिं वाच: सत्यमशीय।
पशूनां रूपमन्नस्य रसो यश: श्री: श्रयतां मयि स्वाहा॥
यजु: ३९-४

को देखने से ऐसा प्रतीत होता है कि जो भी श्रेष्ठ वस्तु या भावना है वह सब श्री: का कारण है या श्री: के कारण है। इस मन्त्र का एक अर्थ यह है कि मन की संकल्प शक्ति, वाणी की सत्यता, पशुओं का रूप (सौन्दर्य+स्वास्थ्य+दृढ़ता), अन्न का रस तथा (यश:) कीर्ति या धन ये सब श्री: का ही रूप हैं। इनके द्वारा श्री: होती है। इन सब का कारण या परिणाम जो श्री: है वह सदा मुझ में निवास करें। एक तरह से यह मन्त्र श्री: शब्द की व्याख्या करता है।

(२) इदं में ब्रह्म च क्षत्रं चोभे श्रियमश्नुताम्। यजु: ३२-१६ के अनुसार वेद को अभीष्ट है कि ब्राह्मण और क्षत्रिय दोनों श्री सम्पन्न हों। यहां श्री: का अर्थ धन नहीं अपितु ज्ञान और बल ही करना उचित तथा संगत होगा।

(३) पीवोऽअन्ना रयिवृध: सुमेधा: श्वेत: सिषक्ति-
नियुतामभिश्री:।
ते वायवे समनसो वितस्थुर्विश्वेन्नर: स्वपत्यानि चक्रु:॥
यजु: २७-२३

इस मन्त्र में निर्देश है कि श्री सम्पन्न तो बहुत से लोग होते हैं, किन्तु (अभिश्री:) चारों तरफ से श्रीमान् वही है जिसके पास (क) खूब अन्न हो, (ख) खूब धन हो, (ग) उत्तम बुद्धि हो, (घ) उत्तम मन हो, (ङ) गतिशील तथा सुन्दर हो, और उत्तम सन्तान हो। अर्थात् ये सब चीजें श्री: की प्रतीक हैं। इनके होने पर मनुष्य श्रीमान् कहाता है, और

जब ये सब चीजें एक साथ हों तो वह (अभिश्रीः) कहलाता है।

(४) वरुणः क्षत्रमिन्द्रियं भगेन सविता श्रियम्।
सुत्रामा यशसा बलं दधाना यज्ञमाशत ।। यजुः २०-७२

इस मन्त्र में क्षत्रम्—इन्द्रियम्—भगः—यशः—बलम् ये ५ शब्द प्रयुक्त हुए। निघण्टु में ये ५ शब्द धनवाची गिनाए गए हैं। अर्थात् ये पांचों वस्तुएं श्रीः का परिणाम हैं अर्थात् सुत हैं, अथवा श्रीः की कारण हैं अर्थात् जनक हैं। इस प्रकार यह भी कह सकते हैं कि पिता और पुत्र एक ही हैं। उनमें केवल कालभेद है, गुण कर्म का भेद नहीं। इसीलिये कहा है 'पिता वै जायते पुत्रः'।

## नई कल्पना

इन पांच शब्दों के एक साथ आने से एक यह कल्पना होती है कि वेद में प्रयुक्त धन वाची सारे शब्द केवल धन के वाचक न होकर लक्ष्मीः और श्रीः की तरह पात्र भेद से ज्ञान, बल और धन तथा सेवा चारों के वाचक हैं।

इस कल्पना में कुछ सार है या नहीं, इस पर भी आगे विचार करेंगे, और देखेंगे कि वैदिक धन क्या वस्तु है ?

...दुर्मर्षमायुः श्रिये रुचानः। अग्निरमृतोऽभवद्वयोभिः—
यजुः १२-२५

दुःख रहित जीवन अथवा रोग रहित आयु को धारण करने वाला श्रीः के लिये रुचिवाला श्रीमान् होता है। और तदनन्तर (वयोभिः) अपने गुणों के कारण अमृत बनता है।

इस मन्त्र का संकेत यह है कि रोग रहित आयु तथा दुख रहित जीवन भी श्रीः के जनक तथा सुत हैं। और श्रीपति बने बिना कोई व्यक्ति अमृत नहीं बन सकता।

## वेद के धन वाची शब्द

निघण्टु में धन वाची शब्दों में मघम्, रेक्णः, रिक्थम्, वेदः, वरिवः, श्वात्रम्, रत्नम्, रयिः, क्षत्रम्, भगः, मीढुम्, (मील्हम्-मील्हुम्), गयः, नृम्णम्, द्युम्नम्, तना, बन्धुः, इन्द्रियम्, वसु, रायः, राधः, भोजनम्, मेधा, यशः, ब्रह्म, द्रविणम्, श्रवः, वृत्रम्, वृतम्—इन २८ पर्यायों की गणना की है।

सामान्यतया वेदः मेधा यशः ब्रह्म श्रवः शब्दों का सम्बन्ध अपने दूसरे अर्थों के साथ ब्राह्मण वर्ण के साथ माना जा सकता है।

श्वात्रम्, तना, इन्द्रियम्, भोजनम्, वरिवः, बन्धुः, श्रवः, वृतम् शब्दों का सम्बन्ध शूद्रों के साथ विशेष है।

मघम्, रेक्णः, रिक्थम्, रत्नम्, रयिः, गयः, रायः, राधः शब्दों के अर्थों का वैश्य वर्ण के साथ सीधा सम्पर्क है।

वरिवः भगः गयः तना बन्धुः इन्द्रियम् वसु राधः भोजनम् यशः वृतम् शब्दों का धन से भिन्न अर्थों में मनुष्य मात्र का या चारों वर्णों का सम्बन्ध है। इन शब्दों की धन पर्यायों में गणना होने के कारण यह कल्पना होती है कि वेद का धन शब्द तथा धन के पर्यायवाची शब्द स्थूल रूप से धन के वाची नहीं हैं। अपितु स्वामी दयानन्द के अनुसार वेद के धन शब्द का अर्थ है—जो मनुष्य को धन्य बनाए, जिसके द्वारा मनुष्य प्रतिष्ठित हो।

वेद में शब्दों का अर्थ रूढ़ न होकर यौगिक अथवा प्रतीक रूप में होता है। इस सिद्धान्त की स्थापना धनवाची पर्यायसूचि भी करती है। क्योंकि यदि ऐसा न होता तो मेधा यश वृत्र आदि शब्दों की इस सूचि में किसी भी तरह गणना नहीं की जा सकती थी।

अब प्रश्न यह है कि क्या उपरोक्त कसौटी के अनुसार वेद के प्रत्येक धनवाची शब्द का मनुष्य मात्र से सम्बन्ध दर्शाया जा सकता है? आइये, इस दिशा में प्रयत्न करके देखते हैं।

मघम्—'मंहतिर्दानकर्मा' से दीयतेऽर्थिऽभ्यः अर्थ में बना है। जो वस्तु

दी जाए—वह मघ है । ज्ञान, बल, धन तथा सेवा चारों वस्तुएं दी जाती हैं । क्षेत्र भेद से चारों वस्तुएं मनुष्य को लक्षित करती हैं, लक्ष्म युक्त बनाती हैं । इसलिये पात्र भेद से मघ शब्द के चारों अर्थ किये जा सकते हैं ।

रेक्णः—'रिचिर् विरेचने' धातु है । निरुक्तकार ने अर्थ किया है 'रिच्यते प्रयतः'—मनुष्य के मरने पर धन बचा रहता है । मरने वाले के साथ नहीं जाता ।

'रिचेः प्रेरणार्थात्' इति माधवः । प्रेर्यतेऽनेन इति ।

इस अर्थ में रेक्ण शब्द के भी ज्ञान, बल, धन तथा सेवा सभी अर्थ संभव हैं ।

रिक्थम्—यह शब्द भी रिचिर् धातु से बना है । इसलिये इसकी स्थिति पूर्णतया 'रेक्ण' के समान है ।

वेदः—विद्लृ लाभे, विद् ज्ञाने, विद् सत्तायाम् । तीनों धातुओं से बनता है । इस शब्द के तो ज्ञान, बल, धन तथा सेवा चारों अर्थ आसानी से हो सकते हैं ।

वरिवः—वृञ् वरणे । भृशं व्रियते । जिसका वरण किया जाय । ब्राह्मण ज्ञान को वरण करने का व्रत लेता है । क्षत्रिय बल को वरण करने का प्रयत्न करता है । वैश्य धन को वरण करने में सारा जीवन लगा देता है । और शूद्र को अपनी जीविका के निमित्त सारी जिन्दगी सेवा अपनानी पड़ती है ।

श्वात्रम्—आशु अतति, अत सातत्यगमने । ज्ञान, बल, धन तथा सेवा किसी की बपौती नहीं हैं । जो प्रयत्न करे, इन्हें प्राप्त कर सकता है । जो आलसी बने—उससे ये चीजें दूर भागती हैं ।

रत्नम्—रमु क्रीडायाम् । रमतेऽस्मिन्, रमतेऽनेन । अपनी रुचि के अनुसार कोई ज्ञान में रमा हुआ है, कोई बल में रम रहा है । कोई धन

से खेलता रहता है और किसी को सेवा में ही राम दिखाई देते हैं।

रयिः—रीङ् गतौ। रीयते प्राप्यते पुण्येन—गच्छति अनेन तृप्तिम्। दीयते-ऽर्थिभ्यः। ज्ञान, बल, धन तीनों ही कर्मों के फल रूप में प्राप्त होते हैं। तीनों ही तृप्ति के साधन हैं। ज्ञानियों की तृप्ति ज्ञान-चर्चा से, वीरों की तृप्ति पराक्रम कृत्यों से, और धनियों की तृप्ति दान और भोग से होती है।

क्षत्रम्—क्षदिः सौत्रः। क्षद स्थैर्ये, क्षदिः शकलीकरणार्थो हिंसार्थश्च। क्षद गतिहिंसनयोः इति सुबोधिनीकारः। पूर्वजन्मसुकृतवशेन तद्भवति स्थिरं भवति, हिनस्ति दारिद्र्यम्, क्षतात् पापात् त्रायते। ज्ञान, बल, धन, सेवा भाव—सभी चीजें पूर्वजन्म के कर्मों के फलरूप में प्राप्त होती हैं। ये सभी पदार्थ अपने विरोधी अभाव का स्वाभाविक रूप में नाश कर देते हैं। ये सब चीजें मनुष्य को पाप कर्म से बचाती हैं। मनुष्य इनमें से किसी की भी साधना में लगा हो, तो पाप कर्म करने का अवकाश ही नहीं मिलता है।

सुक्षत्रासो रिशादसः।

भगः—भज सेवायाम्। भज्यते सेव्यते।

इन चारों पदार्थों की, इनके अर्थी सेवा करते हैं, इनको प्राप्त करने की साधना करते हैं। इन पदार्थों की साधना से ज्ञानी, बली, धनी, सेवक—सब की सेवा होती है। ये सब लोग भगवान् बन जाते हैं। इसलिये भग के पात्र भेद से अर्थ भेद हो जाते हैं।

शिक्षा स्तोतृभ्यो मातिधग् भगो नः।

मीळ्हुम्—मिह सेचने। सिच्यतेऽर्थिभ्यो दातृभिः। गुरु शिष्य के लिये ज्ञान सिंचन करता है। उस्ताद लोग अपने अखाड़े के पट्ठों में बल का सिंचन करते हैं। दानी पुरुष गरीबों, अनाथों, बिधवाओं को धन देते हैं। समाजसेवी बीमारों, अपाहिजों, बेवकूफों

और गरीबों के लिये सेवा द्वारा स्नेह सिंचन करते हैं।

**गयः**— गाङ् गतौ, गा स्तुतौ च, गीयते स्तूयते वा। ज्ञानियों के ज्ञान की, वीरों के बल-पराक्रम की तथा धनियों के ऐश्वर्य की तथा नेताओं की सेवा की सभी स्तुति करते हैं।

**द्युम्नम्**—द्युत दीप्तौ इति—दीप्यतेऽनेन। मनुष्य के पास ज्ञान, बल, धन, सेवा में कोई भी वस्तु हो, वह अपने क्षेत्र में देदीप्यमान बन जाता है।

**इन्द्रियम्**—इदि परमैश्वर्ये। इन्द्रियम्—इन्द्रलिंगमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्र-जुष्टमिन्द्रदत्तमिति वा।
ज्ञान, बल, धन, सेवा चारों पदार्थ ऐश्वर्य के सूचक व बोधक हैं। ऐश्वर्यशाली व्यक्ति ही इनकी करामात देख पाते हैं। इन्द्र आत्मा है, वह अपने शुभाशुभ कर्मों के द्वारा इनकी सृष्टि करता है। अपने कर्मों के अनुसार इनका भोग करता है। और पर-मात्मा कर्मों के अनुसार ही इन चीजों को देता है।
इस प्रकार इन्द्रिय शब्द के यौगिक प्रक्रिया से ये चारों अर्थ हैं। और पात्र भेद के अनुसार इसके ये पृथक् २ अर्थ ही ग्रहण करने चाहियें।

अस्मिन् राष्ट्रे इन्द्रियं दधामि। ऐ० ब्रा० ८-५-४

**वसुः**—वस आच्छादने। वस्ते आच्छादयति तिरोभावयति दारिद्रयम्, दरिद्रता को दूर करने में ज्ञान, बल, धन तथा सेवा सभी कार-गर हैं। अपनी दरिद्रता कोई ज्ञान के प्रयोग से दूर करता है, कोई बल के प्रयोग से दूर करता है, कोई सेवा करके दूर करता है, और कोई अपने धन के कारण दरिद्रता को अनुभव ही नहीं करता।

**रायः**—रा दाने। दीयतेऽर्थिभ्यः, प्राप्यते वा पूर्वकृतेन पुण्येन। इस व्युत्पत्ति के अनुसार ज्ञान, बल, धन, सेवा सभी राय माने

जाएंगे। और वास्तव में ये सब पदार्थ वर्ण भेद से उस उसके लिये राय हैं।

राधः—राध साध संसिद्धौ। राध्नुवन्ति साध्नुवन्ति राधयतेऽनेन धर्मादिः। राधिर्हिसार्थोऽपि। हिनस्ति दारिद्रयम्। अपने वर्ण धर्म के अनुसार व्यक्ति इन चारों वस्तुओं के द्वारा अपने धर्म को सिद्ध करता है, अथवा अपने दारिद्रय को दूर करता है।
इसलिये राधः=ज्ञान, बल, धन, सेवा।

भोजनम्—भुज पालनाभ्यवहारयोः। भुज्यन्तेऽनेन विषयाः। विषयों को भोगने के लिये ज्ञान, बल, धन तथा सेवा सभी की जरूरत है। इसलिये इस शब्द के ये ४ अर्थ हो सकते हैं।

तना—तनु विस्तारे। तनोति विस्तारयति जीवनमनेन। जीवन का विस्तार करने में ज्ञान, बल, धन, सेवा सब समान हैं। इसलिये यौगिक अर्थ स्वीकार करने वालों के लिये इस शब्द के ये ४ पदार्थ अर्थ रूप में स्वीकार करने आवश्यक हैं।

नृम्णम्—नम प्रेह्वत्वे शब्दे च। नमयति प्रह्वीकरोति शत्रून्। जो शत्रु को नत कर दे। निघण्टु ने इस शब्द के बल और धन अर्थ तो किये ही हैं, किन्तु व्युत्पत्ति के अनुसार ज्ञान और सेवा भी उतने ही स्वाभाविक हैं।

बन्धुः—बन्ध बन्धने। बध्नाति अनेन जनान्। जिस प्रकार धनी अपने धन से मनुष्यों को अपने चारों तरफ़ एकत्रित करता है, उसी प्रकार ज्ञानी अपने ज्ञान से, वीर अपने पराक्रम से तथा नेता अपनी सेवा से मनुष्यों को अपनी ओर आकर्षित कर लेता है।

मेधा—मेधृ-संगमे चकारात् हिंसायाम्। मिधिः संगत्यर्थश्च। संगच्छतेऽनेन सर्वम्, हिनस्ति वानेन दुःखदारिद्रयम्। जिस पदार्थ से दूसरों की संगति हो, अथवा दुःख दारिद्रय नष्ट हो, वह मेधा है।

मेधा तो निघण्टुकार को भी स्वीकृत है। इसी प्रकार इसके अर्थ बल और सेवा भी हो जाएंगे।

यशः—अशु व्याप्तौ, अश भोजने। अश्नुते व्याप्नोति जगत्।
अंश्यते वा प्राणिभिः। जो व्याप्त हो जाए—अथवा जिसका भोग किया जा सके। ये अर्थ ज्ञान, बल, धन, सेवा सब पर एक तरह से ही लागू हो सकते हैं। इसलिये इस शब्द के प्रकरणानुसार ये ४ अर्थ हो सकते हैं।

ब्रह्म—बृहि वृद्धौ शब्दे च। वर्धन्तेऽनेन धर्मादयः। इस शब्द के अर्थ ज्ञान, धन, बल तथा सेवा करने में तो कोई कठिनाई है ही नहीं। इस शब्द के तो अनन्त अर्थ किये जा सकते हैं। बल्कि इस शब्द को तो सर्वधुक् या कामधुक् कह सकते हैं। इस शब्द का जो चाहे अर्थ किया जा सकता है।

द्रविणम्—द्रु गतौ। गम्यते प्राप्यते पुण्येन। अनेन तृप्तिं गच्छति। यह पुण्य से मिलता है अथवा इससे तृप्ति मिलती है। इस व्युत्पत्ति के अनुसार इस शब्द के ४ अर्थ एक दम और सरलता से ग्राह्य हैं।

श्रवः—श्रु श्रवणे। श्रूयते दूराद् दूरतरम्। दूर-दूर तक इसकी चर्चा होती है। धन के समान ही ज्ञान, बल, और सेवा तीनों की चर्चा बहुत दूर तक होती हैं। इसलिये श्रवः के भी चारों अर्थ हैं।

वृत्रम्—वृणोतेराच्छादनार्थात्—आच्छादयति कृत्स्नं प्रदेशम्। ज्ञान, बल, धन और सेवा अपनी चर्चा के द्वारा सारे प्रदेश को आच्छादित कर लेते हैं।
वर्धतेर्वा वृध्यर्थात्—वर्धन्तेऽनेन जनाः। सेवा, धन, बल तथा ज्ञान चारों ही मनुष्य की वृद्धि के कारण बनते हैं।
वर्ततेर्वा गतिकर्मणः—वर्तन्ते गच्छन्त्येनम्। इन चारों पदार्थों को लोग प्राप्त करने का प्रयत्न करते हैं।

वृतम्—वृङ् संभक्तौ। संभज्यते सर्वैः। इसे सब बांट लेते हैं। या इसका विभाग किया जा सकता है। ज्ञान, बल, धन तथा सेवा चारों का तारतम्य की दृष्टि से विभाग किया जा सकता है।

इस प्रकार यहां स्पष्ट हो गया है कि वेद में न केवल लक्ष्मीः और श्रीः अपितु धनवाची सारे शब्द वर्ण भेद से, पात्र भेद से, और प्रकरण भेद से, कभी ज्ञान अर्थ का बोध कराते हैं, कभी बल अर्थ को दर्शाते हैं, कभी धन अर्थ के द्योतक हैं, और कभी सेवा अर्थ को सूचित करते हैं।

इससे एक कदम और आगे चलें तो ब्रह्म शब्द या 'अव' धातु से बने ओम् या अव शब्द के चाहे जितने अर्थ किये जा सकते हैं। इसलिये महर्षि पतञ्जलि ने कहा था 'एकः शब्दः सम्यग् ज्ञातः कामधुग्भवति।"

## ला० श्यामसुन्दरलाल जी की पुण्य स्मृति में

हे मानव गौरव के प्रेमी,
जीवन के पिचहत्तर वर्ष
आप जीते हुए जिए,
मृत्यु शय्या पर पड़े हुए आपने कहा था—
"मरने की मुझे इच्छा नहीं, जीने का शौक नहीं;
जिऊंगा तो अपनी शर्त पर जिऊंगा,
औरों की शर्त पर नहीं।"
कोटि-कोटि मनुज आपके
इस मन्त्र पर चल सकें,
प्रभु से यही प्रार्थना है।

**—सत्यभूषण योगी**

# लक्ष्मी-प्रार्थनम्

## वैदिक लक्ष्मीः

**छनी हुई वाणी**

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ।।

ऋ० १०-७१-२

लक्ष्मी, शोभा, गरिमा, महिमा, मंजुलता, भद्र मनोहरता
उसकी वाणी में रहती है, मनुज मनन जो प्रतिपल करता
मन की छलनी में वाणी को जन सक्तु समान छान बोले
मनन, विवेचन, विश्लेषण कर मनुज यहां अपना मुख खोले
मनन करे जो मनुज, शक्तिशाली हो जाता है उसका मन
सखिजन सख्य भाव से उसके निकट बैठते हैं फुल्लवदन

**पापी लक्ष्मी**

प्र पतेतः पापि लक्ष्मि नश्येतः प्रामुतः पत ।
अयस्मयेनाङ्केन द्विषते त्वा सजामसि ।।

अथर्व० ७-११५-१

पापी लक्ष्मी, दूर भाग जा, जा हो जा आंखों से ओझल
यहां दिखाई भी मत तू दे, तेरी है अति मनहूस शकल
करते जग से द्वेष, स्वयं से द्वेष, अधम होते हैं जो जन
बंधते तेरे लौह-पाश में विवश; अशिव है उनका दर्शन

**गिराने वाली लक्ष्मी दूर हो**

या मा लक्ष्मीः पतयालूरजुष्टाभिचस्कन्द वन्दनेव वृक्षम् ।
अन्यत्रास्मत् सवितस्तामितो धा हिरण्यहस्तो वसु नो रराणः ।।

अथर्व० ७-११५-२

हे प्रेरक उत्पादक सविता, कर मेरा अन्तर ज्योतिर्मय
हित रमणीय वस्तुओं से है तेरा हस्त हास-स्मिति-आलय
मुझे गिराती है जो लक्ष्मी; महादुःखप्रद जिसका सेवन
चिपटी, मेरा, महालता ज्यों तरु का, करती दारुण पीड़न
हे सविता, हे पिता, मलिन इस लक्ष्मी को तू दूर भगा दे
जो मुझको थामे, सुख दे, वह वसु देकर जीवन सरसा दे

**कठिन और सरल**

एकशतं लक्ष्म्यो मर्त्यस्य साकं तन्वा जनुषोऽधि जाताः ।
तासां पापिष्ठा निरितः प्र हिण्मः शिवा अस्मभ्यं जातवेदो
नि यच्छ ।।

अथर्व० ७-११५-३

पापी के भी घर लक्ष्मी के लगे हुए अंबार
बड़ा रोब है, बड़ी शान है, करे ऐश मक्कार
पिता जातवेदा, तुझको है जन-जन का मन ज्ञात
ऐसी पर-पीड़क लक्ष्मी से मुझे बचा हे तात
कठिन सरल में अविवेकी जन चुन लेते हैं हा, यहां सरल
सरल बहुत हैं ये पापार्जन, लेकिन ये सब हैं अशिव गरल
लक्ष्मी की कुछ कमी नहीं है, जबकि विष्णु नर-मध्य विराजित
अपने अंदर झांके नर, छवियां लक्ष्मी की देखे शत-शत
हे सर्वज्ञ जातवेदा, तू पापी लक्ष्मी दूर भगा दे
देव, हमारे जीवन को शिव लक्ष्मी से द्युतिमान् बना दे

**पुण्य लक्ष्मियां रमण करें**

एता एना व्याकरं खिले गा विष्ठिता इव ।
रमन्तां पुण्या लक्ष्मीर्या पापीस्ता अनीनशम् ।।

अथर्व० ७-११५-४

पुण्य लक्ष्मियां मेरे मन में, मेरे घर में आ रमण करें
जैसे गौएं बाड़े में आकर सुख से बैठी अदन करें
जो हैं पापी दुष्ट लक्ष्मियां, उनको मैं मार भगाता हूं
उन्नत सिर, उज्ज्वल यश लेकर जीवन का रस पाता हूं

**ब्राह्मण की वाणी**

तामाददानस्य ब्रह्मगवीं जिनतो ब्राह्मणं क्षत्रियस्य ।
अप क्रामति सूनृता वीर्यं पुण्या लक्ष्मीः ।।

अथर्व० १२-५-६

कोई नहीं दबाए सच्चे ब्राह्मण की सद्वाणी
सुनने में कड़वी हो चाहे, वह है जन-कल्याणी
जो पशु-बल से ब्राह्मण की वाणी को यहां दबाता
सूनृत, वीर्य, पुण्य लक्ष्मी का वर्ग उसे तज धाता

## श्रीः

**श्री का उपयोग**

श्रिये जातः श्रिय आ निरियाय श्रियं वयो जरितृभ्यो दधाति ।
श्रियं वसाना अमृतत्वमायन् भवन्ति सत्या समिथा मितद्रौ ।।

ऋ० ९-९४-४

सब गुण लेते जिसका आश्रय, साग्रह आ करते हैं सेवन
उस श्रीदेवी से जीवन हो इस जग में जन-जन का पावन

श्री के लिए जन्म है जन का, श्री से ही उसका है उद्भव
जो प्रभु-भक्त, उन्हें जीवन का प्रतिक्षण देता है श्री नव-नव
होती अमृतत्व-प्राप्ति उनको जो श्री से आवृत रहते जन
उनका पद-पद है संयम-मित, उनका है जग के हित जीवन

**अग्नि श्री है**

जोहूत्रो अग्निः प्रथमः पितेवेलस्पदे मनुषा यत् समिद्धः।
श्रियं वसानो अमृतो विचेता मर्मृजेन्यः श्रवस्यः स वाजी ॥

ऋ० २-१०-१

अग्नि मुख्य श्री है, मानव, कर उसका पुनः पुनः आह्वान
इसको मानस में समिद्ध कर, तुझ को मिले ज्ञान-वरदान
यह ही है मानव का पालक, इसे पिता रक्षक तू जान
यह श्री से आवृत, अमृत है, पूर्ण ज्ञान से लसित महान्
मांज-मांज कर दोषों को यह दूर हटा देता द्युतिमान्
यह जग-विश्रुत, इसका मानस में मानव यह करे सवन
है उसकी जय ही जय, उसके हित लीला है जीवन-रण
भौतिक अग्नि आग; सामाजिक अग्नि सदाचारी ब्राह्मण
है आध्यात्मिक अग्नि, दिव्य संकल्पों से अभिमन्त्रित मन

**स्व-राज्य श्री है**

अत्रि मनु स्वराज्यमग्निमुक्थानि वावृधुः।
विश्वा अधि श्रियो दधे ॥

ऋ० २-८-५

सब प्रकार की श्री यह मानव कब करता है धारण
अत्रि बने वह, अग्नि बने वह, लेकर उनके गुणगण
विलसे सतत प्रगति-रत हो तीनों लोकों के ऊपर
वह पृथ्वी पर ही ले आए सब लोकों का रस भर

सच्चा अत्रि तभी बन सकता जब स्व-राज्य हो प्रियवर
मानव-आत्मा का शासन हो पूर्णतया निज मन पर
औ' संकल्प अग्नि बढ़ता तब होती जब सत्संगति
सतत दिव्य-उक्थ-मनन में रत, रहती है मानव-मति

**विजयी की श्री**

सो अस्मै श्रियमिद् दुहे भूयोभूयः श्व:श्वस्तेन त्वं द्विषतो जहि ।।

अथर्व० १०-६-२०

जीवन के पथ पर पद-पद पर शत विघ्न-बाधाएं हैं
उनसे कर संघर्ष जयी हो, होती मधु लीलाएं हैं
मानव, अधिकाधिक अपने में कर शोभन श्री का आधान
अत्र तत्र सर्वत्र गुणों का कर प्रतिपल दोहन मतिमान्
तो तेरा हर कल आएगा लेकर नव शक्ति, छटाएं
लीला होगी, होंगी जित हत ये विघ्न और बाधाएं

**संकल्प और सत्य की श्री**

मनसः काममाकूतिं वाचः सत्यमशीय ।
पशूनां रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहा ।।

यजु० ३९-४

सजे महत्त्वाकांक्षा मन में, शक्ति पूर्ण संकल्प लसे
मेरी वाणी में हे प्रभुवर, सर्वभूतहित सत्य बसे
पशुओं, विहगों के गुण-गण को करूं सदा निज में धारण
जो स्वादिष्ठ अन्न में रस है, तद्वत् हो मेरा जीवन
यश औ' श्री आएं, लेकर वे मेरा आश्रय करें विहार
ईश, शक्ति दो, पूरे हों ये मेरे दिव्य भव्य उद्गार

**मानव की श्री**

शुक्रेभिरङ्गै रज आततन्वान् क्रतुं पुनानः कविभिः पवित्रैः ।
शोचिर्वसानः पर्यायुरपां श्रियो मिमीते बृहतीरनूनाः ।।

ऋ० ३-१-५

यह सुन्दर है सृष्टि, व्याप्त है श्री इसके कण-कण में
इतनी श्री ! श्री का है अतिशय प्रभु के विश्व भुवन में
जिस मानव के अङ्ग-अङ्ग में दीप्ति, वही सज्जन है
उसकी श्री के मधु-पराग का सौरभ मन-मोहन है
क्रान्त दृष्टि से पूत मनीषी जहां कहीं हों राजित
जाकर चरणों में मानव मति कर्म करें निज पावित
जिसके जीवन का क्षण-क्षण हो दिव्य कान्ति का आलय
उसमें गूंजे व्यापक प्रभु के रसमय गीतों की लय

**गौरव-श्री**

ये समानाः समनसो जीवा जीवेषु मामकाः ।
तेषां श्रीर्मयि कल्पतामस्मिल्लोके शतं समाः ।।

यजु० १६-४६

मित्र बन्धु जो मेरे जिनकी मति स्थिति मेरे यहां समान
उनमें जिऊं यहां गौरव से उठा सीस औ' सीना तान
ऐसा तप श्रम औ' प्रयत्न हो, मेरी यह सतत साधना हो
उन सबकी सम्मेलित श्री ले मेरा जीवन भव्य बना हो

## मघम्

**संकल्प से भरपूर धन**

अग्नि होतारं प्र वृणे मियेधे गृत्सं कविं विश्वविदममूरम् ।
स नो यक्षद् देवताता यजीयान् राये वाजाय वनते मघानि ।।

ऋ० ३-१६-१

जो वैभव भरपूर उसे मघ कहते, मघवा इन्द्र बनें हम
हो बाहुल्य, खिलाएं खाएं; कभी नहीं वैभव होवे कम

भोगों की नदियां बहती हों; ऐसे भोग, बढ़ाएं जो बल
सब देवों में पूज्य अग्नि यह, दे हमको शिव भोग अनाविल
अग्नि दिव्य संकल्प; वरण मैं करता हूं उसका मति, मन से
मानव को सब कुछ मिल जाता देव अग्नि के आराधन से
मेधावी, क्रान्तदृष्टि-शोभित; इसको कुछ भी अप्राप्य नहीं
अमर देव यह दिव्य अग्नि है; आत्मा है इसे पुकार रही

**पुष्टिकारक धन**

त्वं नो अग्न एषां गयं पुष्टिं च वर्धय।
ये स्तोमेभिः प्र सूरयो नरो मघान्यानशुः॥

ऋ० ५-१०-३

जो हैं सूरि, प्रेरणा प्रभु की जिनके उर में जागृत
नर हैं, नव कर्मों के नर्तन में रहते हैं जो रत
जो कि अग्नि के गुणगण के शुभ गीत गुंजाया करते
उनके घर में अग्नि देव आ मघ बरसाया करते
अग्नि देव उन श्रेष्ठ जनों की गति को करते शतगुण
स्वस्थ, पुष्ट रहते सदैव वे, हृष्ट बिताते जीवन

**आत्मा का धन**

य ऋते चिदभिश्रिजषः पुरा जत्रुभ्य आतृदः।
संधाता संधिं मघवा पुरूवसुरिष्कर्ता विह्रुतं पुनः॥

ऋ० ८-१-१२

नहीं कमी कुछ, बहु संपद् से इन्द्र हमारा आत्मा शोभित
सजग इन्द्र हो तो वाणी है नहीं कहीं भी होती खण्डित
मानव मननशील बनता है, गला फाड़ वह कभी न बकता
जहां ज्योति है, वहां मौन है; कभी मनस्वी अधिक न कहता

**घेरों को तोड़ो**

सत्राहणं दाधृषिं तुम्रमिन्द्रं महामपारं वृषभं सुवज्रम् ।
हन्ता यो वृत्रं सनितोत वाजं दाता मघानि मघवा सुराधाः ।।

ऋ० ४-१७-८

कर में वज्र लिये यह आत्मा रिपुओं का अविरत नाश करे
महाशक्ति-संपन्न रहे यह, मन में दिव्य प्रकाश वरे
यहां सतत संघर्ष, घोर रिपु बैठे हैं आत्मा को घेरे
मिलता है बाहुल्य, तोड़ दे यदि यह आत्मा घातक घेरे

**शान्त साधना करो**

तिष्ठा सु कं मघवन् मा परा गाः सोमस्य नु त्वा सुषुतस्य यक्षि ।
पितुर्न पुत्रः सिचमा रभे त इन्द्र स्वादिष्ठया गिरा शचीवः ।।

ऋ० ३-५३-२

मेरी आत्मा मत विचलित हो, स्थिर रह सतत साधना में रत
तुझको सब कुछ मिल जाएगा, इधर उधर तू व्यर्थ भटक मत
तुझमें महाशक्ति है, कसकर खूब पकड़ ले अपना आंचल
तेरी वाणी से रस बरसे, जैसे बरसें मधुमय बादल

## रेक्णः

**खूब कमाओ, खूब दान करो**

त्वमग्न उरुशंसाय वाघते स्पार्हं यद् रेक्णः परमं वनोषि तत् ।
आध्रस्य चित् प्रमतिरुच्यसे पिता प्र पाकं शास्सि प्र दिशो विदुष्टरः ।।

ऋ० १-३१-१४

यदि मन में संकल्प जग उठे, अग्नि वहां है हुआ उपस्थित
लिये महत्त्वाकांक्षा यह नर बढ़ करता विजय-गीत गुंजित

दुर्बल से दुर्बल हो कोई, संकल्प अग्नि उसका है रक्षक
जो नर करे साधना, उसको सिद्धि अवश्य मिलेगी मोहक
सबके हित में लगता जो धन, जग में वह रेक्ण कहाता है
दिव्य प्रेरणा है देता वह, मानव प्रतिपल सुख पाता है

### शेष धन

परिषद्यं ह्यरणस्य रेक्णो नित्यस्य रायः पतयः स्याम ।
न शेषो अग्ने अन्यजातमस्त्यचेतानस्य मा पथो वि दुक्षः ।।
ऋ० ७-४-७

स्वार्थी जन में होता यहां परायापन, वह दुष्ट लुटेरा
न वह एक आत्मा को लखता, उसके मन को अघ ने घेरा
मनमें ले संकल्प अग्नि हम उसके सब छल जाल तोड़ दें
सदाचार-पथ पर चलते हम वैभव-मुख निज ओर मोड़ दें
जिसमें अन्य-भावना उसका धन है शेष नहीं रह पाता
बड़ा खर्च है उसका खाना, घोर कर्ज में वह पड़ जाता
बही न जिनकी शेष दिखाती, महामूर्ख हैं वे अज्ञानी
सुख-रस की अनुभूति सदा ही उनके हित रहती अनजानी

### ज्ञानेन्द्रिय-गौएं पुष्ट हों

परा गावो यवसं कच्चिदाघृणे नित्यं रेक्णो अमर्त्य ।
अस्माकं पूषन्नविता शिवो भव मंहिष्ठो वाजसातये ।।
ऋ० ८-४-१८

नित्य रेक्ण दे मुझको पूषा, वह धन जो जग का हितकारी
तू प्रदीप्त है, तू अमर्त्य है, तू सारे जग का उपकारी
मेरी ज्ञानेन्द्रिय, गौएं ये हृष्ट पुष्ट हों पा निज भोजन
पूषन्, हो रक्षक कर मंगल; तू उदार है, दे बल का धन

